श्रीमते रामानुजाय नमः ।

## ॥ अथ रामपटल प्रारम्भः ॥

:——:०:——

श्रीसीतायासहगतं सरयूनिकुञ्जे मल्लीतमालवकु लादिसुवृक्षवृन्दे ॥ चंपेवपीतवसनंशतपत्रहस्तं विध्वा ननं रघुवरंसततंविवहे ॥१॥ अयेसीताजानेरघुवेर हरे मामवमुद्राचिरंकम्बुग्रीवोवनजरुचिरमालोविधुमुखः॥ सदासद्भिः सेव्योद्युमणि कुलदीपोद्युतितनुर्विशाला क्षास्त्वंवैप्रणतजनपालस्सुमुखदः ॥१॥ ज्ञानमुद्राधरं रामं सच्चिदानन्दविग्रहं ॥ ब्रह्ममूहूर्तंचोत्थायचिन्त येद्रघुनन्दनम् ॥२॥ तथाःप्रातःस्तवः ॥ प्रातःस्मरामि

रघुनाथमुखारविंदम् मंदस्मितंमधुरभाषिविशालभालम् । कर्णावलंविचलकुण्डलशोभितगंडं कर्णान्तदीर्घनयनंनयनाभिरामम्॥ १॥प्रातर्नमामिरघुनाथपदारविंदम्वज्रांकुशादिशुभरेखिसुखावहंमे॥योगीन्द्रमानसमधुव्रतसेव्यमानं॥ शापापहसपदिगोतमधर्मपत्न्याः ।२। प्रातर्भजामिरघुनाथकरारविंदरक्षोगणायभयदंवरदंनिजेभ्यः।यद्राजसंसादिविभंज्यंमहेशचापं।सीताकरग्रहणमंगलमापसद्यः ॥३॥ प्रातःश्रयेतिनतारघुनाथ मूर्तिनीलांबुदोत्पलसिततररत्ननीलाम् ॥ आमुक्तमौक्तिकविशेषविभूषणव्याध्येयां समस्तमुनिभिर्निजमुक्तिहेतुम् ॥४॥ प्रातर्वदामिवचसा रघुनाथनाम

वाग्दोषहारि सकलनहतृशामिलां। यत्पार्वतीस्वपति
नासहमुक्तकामाभक्त्यासहस्र हरिनामससमंजजापं॥५॥
यःश्लोकपंचकमिदं मनुजः पठेतुनित्यं प्रभातसमये
नियतःप्रबुद्धः॥ श्रीरामकिंकरजनेषुसएवमुख्योभुत्वा
प्रयाति हरिलोकमनन्यलभ्यम् ॥ ६ ॥ अथ प्रातः
स्नानार्थोद्यमः ॥ ॐसमुद्रमेखलदेविपर्वतस्तनमंडले
विष्णुपत्निनमस्तुभ्यं पादस्पर्शंक्षमस्वमे ॥ १ ॥ इति
पृथ्वींसंप्रार्थ्य ॥ श्रीमान्साधकेन्द्रोदक्षिणांगेन समु
थ्याय श्वासानुसारणे तस्यांपादौनिधाय शौचाय
व्रजेत् गत्वा तिर्थोदकतत्रानिक्षिप्यस्नान साधनम्॥
अथशौचादिकंकर्तुमाहेरन्मृतिकाम्बुधः॥१॥ येनत्वां

खनाति ब्रह्मायेनत्वांरुद्रकेशवौ॥तेनत्वाहंखानिष्यामि शुद्ध्यर्थंकरपादयोः ॥२॥ इतिमंत्रेणमृत्तिकांखनित्वा प्रगृह्यांच ॥ ॐ सलिलस्य मुखंदृष्ट्वा विष्णुरूपं नमोस्तुते। गृह्णामित्वां क्रियार्थोंहमापोदेव्यः पुनंतुमाम् ॥ १ ॥ इतिजलग्रहणमंत्रः ॥ ततो वहिर्गच्छेन्नैरृत्यां दिशिगत्वासूर्य्यंदक्षिणंकृत्वा वस्त्रेण शिरः प्रावृत्य यज्ञोपवीतदक्षिणकर्णे निधाय ॥ ॐउतिष्ठंतुसुरासर्वे यक्ष गंधर्व किन्नराः ॥ पिशाचागुह्यकाश्चैवमलमूत्रे करोम्यहम्॥ १॥इतिमंत्रेणतालत्रयंकृत्वा शौचसमये सुरादीनामुच्चाटनंकुर्य्यात् ॥ ॐ अश्वक्रांतेरथक्रांते विष्णुक्रांते वसुंधरं ॥ मृत्तिकेहरमेपापं यन्मयापूर्व

संचितम् ॥ १ ॥ इति मृत्तिका शुद्धिमंत्रः ॥ ॐ जल
दहतिपापानिकमंडलु गतंतुयत ॥ गंगातोययसमानि
त्यंजलपात्रंच शुध्याति ॥१॥ इतितुम्बिकापात्रंचशुद्धि
मंत्रः । ॐ जलेचाग्निः स्थलेचाग्निः अग्निश्च वायु
मंडले । त्रिभिरग्निप्रकाशैश्चकाष्ठमात्रंचसुध्यते॥ १॥
इतिकाष्ठपात्रंशुद्धिमंत्रः ॥ ॐ आयुर्बलंयशोवर्चःप्रजा
पशुवसूनिच ॥ ब्रह्मप्रज्ञांचेमेधांच त्वन्नोदेहिवनस्पते
।१।इतिदंतकाष्ठच्छेदन मंत्रः स्कंदपुराणेप्रभासखंडे
पंचदशोध्यायः ॥ ननपाटितंसमश्नीयाद्दन्तकाष्ठं स
वर्णनम् ॥ चोर्ध्वंशुष्कंवक्रंवानैववात्वाग्विवार्जितम् । १
वितास्ति मात्रमश्नीया दीर्घंह्रस्वंचवर्जयेत्तादंमुखः

प्राङ्मुखोवासुखासीनोप्यवाग्यतः ॥ २ ॥ कामयथेष्ठं हृदयेकृत्वा समभि मन्त्र्येच। मंत्रेणानेनमतिमानश्श्री याद्दन्तधावनम् ॥ ॐदन्तरूपमधोगंच दन्तधावनसु तत्फलम् ॥ कुर्वन्तिचत्रयोदेवाममदोषो नदीयताम्॥ इति दंतधावनमंत्रः ॥ दाक्षिणेपाश्चिमेयोवैदंतधावन माचरेत् ॥ तस्यस्नानं फलंनास्ति तदन्यस्यां स माचरेत॥१॥अथस्नानाविधिःप्रवाहेसन्मुखेस्नानंतडागे रविसन्मुखे कूपेवाप्यांतथा पूर्वंगृहेस्नानंतथोत्तरम्॥ प्रवाहेशतधेनुश्चतडागेदशधेनुकम् ॥ कूपेवाप्यामेक धेनुर्गृहेस्नानंतुकेवलम्॥ आचम्यषड्गन्यासं (ॐ वाक् ॐवाक् ॐप्राणः ॐप्राणः ॐचक्षुः ॐचक्षुः इति )

कृत्वाप्राणायाम मलापकर्षणं स्नानं च कृत्वा नाभि
मात्रे जलेस्थित्वा: ॥ ॐ विष्णुः ॐ विष्णुः ॐ विष्णुः
इत्याचमन मंत्रः ॐ आद्यपुराण पुरूषोत्तमायब्रह्मणे
नमः ॥ ॐ अद्यश्रीब्रह्मणोद्वितीयपरार्धे श्रीश्वेतवाराह
कल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमेकलियुगे
जम्बूद्वीपे भरतखण्डे आर्यावर्तैकदेशे अमुकक्षेत्रे
अमुक संवत्सरे अमुकमासे अमुकपक्षे अमुक तिथौ
अमुक वासरे अमुकनक्षत्रे अमुकोहं श्रीराम प्रीत्यर्थं
प्रातःस्नानंमहंकरिष्ये इतिसंकल्पः॥जलप्रणवात्मके
त्रिकोणकृत्वाष्टदलं मण्डल विलिख्य सूर्य्य मण्ड
लादं कुशमुद्रया सर्वतीर्थन्यवाहनम् । ॐ ब्रह्माण्डोदर

तीर्थानिकरैः स्पृष्टानितरवेतेन. सत्येनमेदेवतीर्थं देहि दिवाकरः ॥ १ ॥ गंगेच यमुनेचैव गोदावरि सरस्वति नर्मदासिंधुकावेरी जलेस्मिन्संनिधिकुरु ॥ २ ॥ ततः सुरभियोनिकुम्भकालिंगमुद्रां प्रदर्शयेत् इतिमंत्रद्वयेन तीर्थान्यावाह्यकुंभकमुद्र्याशिरसित्रिरभिषिं च्यमूल मंत्रोच्चारणंततोनिरूप्य सप्तछिद्राणित्रिर्निमज्ज्यो न्मज्ज्यजलेन त्रिराचम्य ॥ जलेन तिलकं विधाय गायत्र्याशिखाबंधनंकृत्वा मूलेन श्रीरामसतपर्यामि स्वाहा अथवा ब्रह्मनाम सहस्रेण शिवनामशतेनच ॥ विष्णुर्नामसहस्रैस्तु शिखांवधकरोम्यहम् इति शिखा बंधनम् ॥ १ ॥ ॐब्रह्मपुत्रेशिखायांचब्रह्मदण्डतपास्विनी ॥

सर्वदेवनमस्कारैः शिखामुक्तिकरोम्यहम् ॥ १ ॥ इति
शिखामुक्ति मंत्रः॥ इतिस्नानविधि ॥ ततस्तत्रैवस्थानं
वागच्छेत्ततो वासांसि जलेन शुद्धिंकुर्यात् ॥ १ ॥
ॐअपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत
पुंडरीकाक्षंसबाह्याभ्यांतरःशुचि ॥ ततःआसनविधिः
गोमये न शुद्धमृत्तदाचभूमिमादौ प्रलेपयेत् ॥ कृष्णा
जिनंकुशासनंमासनंपरिकल्पयेत् ॥ १ ॥ ॐ भूर्भुवः
स्वः कूर्मायनमः इति मंत्रमुच्चार्य सुरभिमुद्रा प्रदर्श
येत् ॥ ॐपृथ्वीत्वयाधृतालोका देवित्वंचविष्णुनाधृता
त्वंचधारयमांदेविपवित्रंकुरुचासनम् ॥ १ ॥ इतिमंत्रेण
तत्रासनेउपविश्यपंचसंस्कारान्भावयेति॥अथऋग्वेद

ञ्चसंस्कारप्रारम्भः ॥ अथ मुद्राविधिः श्रीराम पूजा
द्ध्येमुद्राधारयेत् । ॐ श्रीरामनत्वामुद्राः पञ्चतत्व
ायआत्मनोधारयेत् ॥ श्रीरामस्यानुचरो भवति
ति ऋग्वेदेप्रथम संस्काराः ॥१॥ ॐयौवलोकपावनी
लसी काष्टाजांमालिकां कण्ठेधारयाति सजीवन
क्तोभवति इति ऋग्वेदेद्वितीयः संस्कारः ॥ २ ॥ ॐ
ासौगोपीचन्दन वेणुपत्राकरोमूर्ध्व पुण्ड्र तिलकं
ादशपंचमसंख्यमात्मनोनिर्धारयतिशंखचक्रांकित
ञ्ाणिचस श्रीरामस्यानुचरो भवति स्मरेततो भ
ति इति ऋग्वेदेतृतीय संस्कारः ॥ ३ ॥ ॐरांरीं रूंरैं
रः ॐयोहंससोहंपरमात्मने स्मरेत् समहायान् स

पट.

५

शंखप्रार्थनामंत्रः॥सर्वनादमयीघण्टा॥ देवदेवस्यवल्ल
भा॥त्वन्निनादेनसर्वेषांशुभंभवतिशोभने ॥ २ ॥ इति
घंटाप्रार्थना मंत्रः उत्तिष्ठोत्तिष्ठभद्रंते उतिष्ठजगदी-
श्वरः॥ त्वयिउत्थायमानेतु उत्थितंभुवनत्रयम् ॥३॥
उत्तिष्ठोत्तिष्ठश्रीराम उत्तिष्ठजानकीपते ॥ उत्तिष्ठ
कमलाकान्तत्रैलोक्येमंगलंकुरु ॥४॥ इति उत्थापन
मंत्रः ॥ आगच्छभगवन्विष्णोस्वस्थानात्परमेश्वरः।
अहंपूजाकरिष्यामि सदात्वं संमुखोभवः ॥५॥ इत्या
वाहनम् ॥ सिंहासनंसुवर्णस्यनानारत्नोपशोभिते ॥
अनन्तफलपत्रस्यउपविशासनेप्रभो॥६॥इत्यासनम्॥
स्नानार्थंस्वच्छतोयानि गंधपुष्पयुतानिच पाद्यंगृहा

णदेवेशभक्तानुग्रहकारकः ॥७॥ इतिपाद्यम् ॥ शंखतो
यसमानीतंगंधपुष्पादिवासितम् अर्घ्यंगृहाणदेवेश प्री
त्यर्थंमेसदाप्रभो ॥ ८ ॥ इत्यर्घ्यः ॐविष्णुः ॐविष्णुः
ॐविष्णुःइत्याचमनंदधिदुग्धंमधुघृतसर्पिःशर्करांचत
थाप्रभो ॥ समर्पयामिदेवेशप्रीत्यर्थंप्रतिगृह्यताम्॥९॥
इति मधुपर्कादि स्नानम् ॥ गंगासरस्वतीतापीपयो
ष्णीनर्मदार्कजा ॥ तज्जलैःस्नापितोदेवतेनशांतिकुरु
ष्वमे ॥ १० ॥ इतिस्नानम् ॥ गंगातोयंसमानीतंसुवर्ण
कलशाद्धृतम् आचम्यंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यताम्
॥ ११ ॥ इत्याचमनं ॥ शीतवातोष्णवस्त्राणपरलज्जा
निवारणे ॥ सुवेषधारितेयस्माद्वासमसीप्रतिगृह्यताम्

॥१२॥इतिवस्त्रम् ॥ ब्रह्मणानिर्मितंसूत्रंविष्णुग्रन्थिस
मन्वितम् ॥इदंयज्ञोपवीतंचगृह्यतांतुजनार्दन ॥ १३ ॥
इति यज्ञोपवीतम् ॐ विष्णुः३ इत्याचमनम् । किरीटं
कुंडलहारकंकणांगदनूपुरं । नानारत्नमयंत्वगेभूषणं
प्रतिगृह्यतां ॥१४॥ इतिभूषणम् ॥ मलयाचलसंभूतंशी
तमानन्दवर्धनम् ॥ काश्मीरघनसाराढ्यंचंदनं प्रतिगृ
ह्यतां॥१५॥इतिचंदनं ॥ ब्रह्मार्पितंसमज्योतिःशक्राद्यैः
सर्वदेवताः ॥ वस्त्रंगृहाणदेवेशप्रीत्यर्थंमेसदाप्रभो ॥
१६ ॥ इतिउत्तरायवस्त्रं ॐविष्णुः ३ इत्याचमनम् ॥
महाप्रसीदजननिसर्वसौभाग्यवर्द्धिनी॥ आधिव्याधि
हरेदेवितुलसित्वांनमाम्यहम् ॥ १७ ॥ त्वयाहीनम्महा

भागेसमस्तंकर्मनिष्फलं ॥ अतश्चिनौमित्वांदेविपूसी
दवरदोभवः ॥१८॥ युग्मपत्राभ्यांसंयुक्तांमंजरीमध्य
संस्थिताम् । ददामिरामप्रीत्यर्थंगृहाणजगदीश्वरः
॥ १९ ॥ नानाविधानिपुष्पाणिऋतुकालोद्भवानिच ॥
मयार्पितानिसर्वाणि पूजार्थंप्रतिगृह्यताम् ॥ २० ॥
इतिपुष्पः ॥ वनस्पतिरसोद्भूतं सुगन्धाढ्य मनोहरं ॥
आघ्रेयःसर्वदेवानांधूपोयम्प्रतिगृह्यताम् ॥ २१ ॥ इति
धूपं ॥ घृतवर्तिसमायुक्तंतथाकर्पूरसंयुतम् ॥ दीपंगृहा
णदेवेशत्रैलोक्यातिमिरापहम् ॥ २२ ॥ इतिदीपम् ॥
अन्नंचतुर्विधंस्वादुरसैषडाभिःसमन्वितम् । भक्ष्यभो
ज्यसमायुक्तं नैवेद्यंप्रतिगृह्यताम् ॥२३॥ इतिनैवेद्यं ॥

ॐ विष्णुः ३ इत्याचमनम् ॥ सामवेदे आम्नायोपानि
षदे नैवेद्यविधिः ॥ कृताह्निकोवेदोध्यापककोद्विजः ॥
पूतेनाचारेण पूतेन मनसाऽभ्यन्तरेणचारेणह्यावाचा
रेण धान्यसंस्कृत्यपचित्वापाकं वाग्जितो नारायण
स्य पुरःसरं समर्प्यपार्षदान्सन्नह्यघण्टानादं निनद
यन्दरवरोदकेन तुलसीदल मिश्रितेन पाकान्न
सर्वतःपरिवृताकृति सवेष्टयित्वाऽपोशनं दद्यात् मृतो
परस्तरणमसीत्य मृतोपिधानमसीतिततोन्नं भगवद्
रूपाय शालिग्रामस्वरूपायनिद्यातः। पटंदत्वाबहिरा
गच्छेत्। पुरुषसूक्तं तारकब्रह्म जपंकृत्वा मध्येजलं
निवेद्य दक्षिणतोभूत्वा नैवेद्यं परिसरतपुनर्नादं निनद

राम. | पट.

२५

यन् आचमनीयंच पयःपीयूषमसृतं फलेक्ष्वादिकम् दत्वा शुद्धेन साम्नामुखशुद्धिदत्वा ॥ तुलस्यांजलिं दद्यात् इतिश्रुति ॥ नागवल्लीदलैर्दिव्यां पूंगीखदिर संयुतम् ॥ वक्रसौरभ्ययुक्तस्वादुतांबूलं प्रतिगृह्यताम् ॥ ॥ २४ ॥ इतितांबूलम् ॥ सुदीप्तंघृतकर्पूर पूरितंसप्त वर्त्तिकम् ॥ आर्तिक्यदेवदेवेशसगृह्णामि मयार्पितम् ॥ २५ ॥ इत्यार्तिक्यम् ॥ चंद्रसूर्यसमज्योतिराकाश तारासमान्वितम् ॥ त्रिशब्दभेर्याश्चदेवेशप्रतिगृह्णार्ति कम्प्रभो ॥ २६ ॥ इत्यार्तिक्यम् ॥ हरिभक्तिविलासे प्रज्वालयेत्तदर्थंचकर्पूरेणघृतेनवा। आर्तिक्यंशुभपात्रे विषमानेकवर्तिय। इति श्रीगोपालभट्टोदाहृत विष्णु

धर्मोत्तरवचनम् ॥ यन्मयाभक्तियोगेनपत्रंपुष्पफलं जलम् ॥ निवेदितंचनैवेद्यंतद्गृहाणानुकम्पया ॥२७॥ आवृतांमृदुपुष्पाणांवनस्पातिरसायुताम्॥ पुष्पांजलि महंदद्मिसगृहाणकृपानिधे॥ २८ ॥ इतिपुष्पांजलिः ॥ उपचारैः समस्तैस्तुयत्पूजाचमयाकृता॥तत्सर्वंप्रणतां यातुह्यपराधक्षमस्वमे ॥२९॥ इतिअपराधक्षमापनम् यानिकानिच पापानि ब्रह्महत्या शतानिच ॥ तानि तानि विनश्यन्ति प्रदक्षिणा पदेपदे ॥ ३० ॥ इति प्रदक्षिणा॥ त्राहिमांपापिनंघोरंधर्माचाराविवर्जितम् ॥ नमस्कारेणदेवेश संसारार्णवपातिनम् ॥ ३१ ॥ इति नमस्कारः॥ नीलाम्भोधरकान्तिकायमनिशं वीरास

नाध्यासिनं मुद्रांज्ञानमयींदधानमपरं हस्तांबुजजानुनि ॥ सीतांपार्श्वगतांसरोरुहकरां विद्युन्निभांराघव पश्यन्तंमुकुटांगदादि विविधाकल्पोज्वलांगंभजे ॥ ३२ ॥ इतिध्यानम्॥क्षीरसागरसमुद्रेशेशेषशय्यामहाशुभा ॥ तस्यांस्वपिहिदेवेशकुरुनिद्रांजगत्पते ॥३३ ॥ इतिशयनं ॥ तच्छय्यासुप्तो विष्णुलक्ष्मीश्चरणसेविनी ॥ प्रणमन्तिसुराःसर्वे ब्रह्माभृगुश्चनारदः ॥ ३४ ॥ इतिचरणसेवनं ॥ मंत्रहीनंक्रियाहीनं भक्तिहीनंसुरेश्वरः ॥ पूजितोसिमयादेव परिपूर्णंतदस्तुमे ॥ ॥ ३५ ॥ आवाहनंनजानामि न जानामिविसर्जनम्॥ पूजांचैवनजानामित्वंगतिः परमेश्वरः ॥ ३६ ॥ इति

विसर्जनम् मंत्रः ॥ आसनंस्वागतं पाद्यमर्घ्यमाचनी
यकम् ॥ मधुपर्काच ममस्नानवसनाभरणानिच ॥
॥ ३७ ॥ सुगन्धसुमनोधूपदीपंनैवेद्यमेवच ॥ प्रार्थना
चरणाचार्ये अपर्णानिचषोडशः ॥ ३८ ॥ इति पंच
रात्रोक्त पूजाविधिः ॥अथद्वात्रिंशदपराधाः आगमेन
यानैर्वापादुकैर्वापिगमनं भगवद्गृहे ॥ देवोत्सवाद्य
सेवाचह्यप्रणास्तद्गृहे ॥ १ ॥ उच्छिष्टेवाऽथवाशौचे
भगवद्दर्शनादिकम् ॥ एकहस्तप्रणामश्च तत्पुरस्ताद
दक्षिणम् ॥ २ ॥ पाद प्रसारेणचाग्रे तथा पर्य्यंक
बन्धनन् ॥शयनं भक्षणंवापि मिथ्याभाषणमेवच ॥
३ ॥ उच्चैर्भाषा मिथ्याजल्पो रोदनानि च विग्रहे॥

निग्रहानुग्रहाचैव नृषुचक्रूर भाषणन् ॥ ४ ॥ कम्बला वरणंचैव परनिन्दापरास्तुतिः ॥ अश्लील भाषणं चैव अधोवायु विमोक्षणम् ॥ अशक्तौ गौणोप चारश्च निवेदितं भक्षणं ॥ तत्तत्कालोभवांनां च फलादीना मनर्पणम् ॥ ६ ॥ विनियुक्तावशिष्ठस्य प्रदानंऽयंजनादिके॥पृष्टीकृत्यासनंचैवपरेषामभिवाद नम् ॥ ७ ॥ गुरौमौननिजस्तोत्र देवतानिंदनंतथा ॥ अपराधस्तथाविष्णोर्द्वात्रिंशत्परिकीर्तिताः ॥ ८ ॥ नानापराधयुक्तानांनामान्यैवहरंत्यधं ॥ अविश्रांतप्रयुक्तानितान्यैवार्थकरानिच ॥९ ॥ रामंजानकीशंमनु कुल तिलकं नागारीमोदयंतं। राजन्यागर्वघातंयजन

सुनिरतंनम्रक्रादिदेवम् ॥ दारोद्धारंजनेशंसकलगुण
गणंनेत्रजायाः। प्रतिरेशोभाढ्यंवैरमंतंधरणिपातिपातिं
दीनबंधुंविवन्दे ॥ १० ॥ अथद्विपञ्चाशत्द्वाराख्याः
ॐ रामानंदोनिम्बानित्योविष्णुश्श्यामः श्रीमाधवः ॥
चत्वारोधर्मशीलाश्चजगतिधर्मस्थापकाः ॥ १ ॥ एते
षां मनुयायिनोद्विपञ्चाशद्विजज्ञिरे ॥ अनंतानन्दाल
खरामौसुखानन्दोनरहरिः ॥ २ ॥ भवानंदकीलाग्रौच
सुरसुरानंदपस्तथापीपाख्योजिजंगमाश्चत्यागिं विर
मथंभणा ॥ देवाकरानभानंदगोकुलोविट्ठलस्तथा ॥
नाभाटीलाशोभुरामा राघवचेतनस्तथा ॥ ४ ॥ ज्ञानि
नाभापरशुरामो नामदेवकबीरको ॥ कुवाख्योदेवमुरा

रिर्दुदुरामभडंगिनौ ॥५॥ चेतनस्वामीनागाख्यआ
त्मरामस्तथैवच ॥ नित्यनंदोयोगानंदोघमंडीमकुल
कस्तथा ॥६॥ भगवन्नरायणश्चैव रामरंगीतथैवच॥
पूर्णवैरागीगोविंदोरामरावणएवच ॥७॥ राधावल्लभी
हनुमानल्लुलतुरंगीएवच।चतुर्भुजीकर्म चंदकालुनयना
ख्यास्तथा ॥८॥ श्रीमद्वनखंडीचैवरामरमाणीएवच॥
श्रीयुतमाधवश्चैव श्रीतनतुलसीस्तथा॥इतिद्वाराख्याः
भगवतोपादोदकस्य माहात्म्यं जानात्येवहिशंकरः॥
विष्णुपादोदकंपीत्वा शुद्धिमाप्नोतितत्क्षणात् विष्णु
पादोकंदेविपीत्वा शिरशिधारयेत ॥ पुण्यपापविनिर्मु
क्तोवैष्णवीगीतामाप्नुयात् ॥३॥ तीर्थंप्रसादस्वीका

रानन्तरं वैष्णवी द्विजः नहस्तलाक्षनंकुर्यान्नतत्राचमनं क्रिया ॥३॥ इतिचरणामृतमाहात्म्यं ॥ महोपनिषदि । विष्णुनाऽश्नीतपश्नंतिविष्णुनाघ्राणजिघ्रंति विष्णु नापीतंपिवति ॥ विष्णुनारसितंरसंयातितस्माद्विद्वांसो विष्णुपहृतंभक्षयेयुरिति ॥ १ ॥ विष्णोर्निवेदितंचान्नं योऽश्नातिभुविमानवः ॥ सयातिपरमंस्थानंपुरावृत्तिवर्जितम् ॥२॥ इतिभगवत्प्रसाद माहात्म्यंविष्णुपुराणे । अर्च्येविष्णोशिलाधीर्गुरुषुनरमतिर्वैष्णवे जातिबुद्धि विष्णोर्वावैष्ण वानांकालिमलमथनेपादतीर्थेऽम्बुबुद्धिः सिद्धेतन्नाम्निमंत्रे कलिकलुष हरेशब्दसामान्यबुद्धिः श्रीशेसर्वेश्वरेशेतदितरसमधीयस्यवानारकीसः ॥१॥ पद्मपुराणे ॥ अर्चावतारे पादोदेवैष्णवेजाति चिंतनं

मातृयोनि परीक्षयास्युलयमाहुर्मनीषिणाः ॥२॥ स्कन्दपु० ॥ प्रति-
मांमंत्रतीर्थेषु भजनेवैष्णवेगुरौ ॥ यादृशीभावनायस्यासिद्धिर्भवाति-
तादृशी ॥३॥ काशी खण्डेब्राह्मणः ॥ क्षत्रियोवैश्यः शूद्रोवायदिवे-
तरः ॥ विष्णुभक्तिसमायुक्तोः ज्ञेयः सर्वोत्तमोत्तमः ॥४॥ हस्ति-
नाताड्यमानेपिनगच्छेज्जैनमन्दिरं ॥ नवदेद्या वनींभाषांप्राणैः
कण्ठगतैरपि ॥ १ ॥ विष्णुयामले ॥ शंखचक्रगदापद्म मग्नितप्त-
विशेषतः । धारणंद्वारवत्यांहिवैष्णवानांविधीयते ॥ १ ॥ पद्म पु० ॥
आग्नेतप्त सदाधारे द्वारवत्यांविचक्षणैः ॥ नान्यस्थानेजातुराज
न सत्यमेतद्ब्रवीमिते ॥२॥ बृहद्ब्रह्मसंहितायाम् । तुलसीमालया-
युक्तोद्वारकाचक्रचिह्नितः । ममध्यान रतोजंतुरहमेवनचेनरः ॥३॥
ऊर्ध्वपुण्ड्रधरोमर्त्योमृत्युमाप्नोतिकुत्रचित ॥ सागच्छातिपरंस्थानं-
देवाद्यै रपिदुर्लभम् ॥४॥ पद्मपु०॥ यच्छरीरंमनुष्याणांमूर्ध्वपुंड्रविना-